पुनः काशि किमाश्चर्य्यमतः परम् ॥ ८ ॥ तस्य तेजोविशेषेषु स्वय-
मात्मा प्रतिष्ठितः । यतो बीजं मही चेयं धार्य्यते सचराचरा ॥ ९ ॥
यत्र देवो महाबाहुः शाश्वतः पुरुषोत्तमः । अनादिनिधनो विप्र
किमाश्चर्य्यमतः परम् ॥ १० ॥ आश्चर्य्याणामिवाश्चर्य्यमिदमेकन्तु मे
शृणु । विमले यन्मया दृष्टमम्बरे सूर्य्यसंश्रयात् ॥ ११ ॥ पुरा
मध्याह्नसमये लोकांस्तपति भास्करे । प्रत्यादित्यप्रतीकाशः सर्वतः
समदृश्यत ॥ १२ ॥ स लोकांस्तेजसा सर्वान् स्वभासाभिर्विभासयन् ।
आदित्याभिमुखोऽभ्येति गगनं पाटयन्निव ॥ १३ ॥ हुताहुतिरिव
ज्योतिर्व्याप्य तेजोमरीचिभिः । अनिर्द्देश्येन रूपेण द्वितीय इव
भास्करः ॥१४॥ तस्याभिगमनप्राप्तौ हस्तौ दत्तौ विवस्वता । तेनापि
दक्षिणो हस्तो दत्तः प्रत्यर्चनार्थिना ॥ १५ ॥ ततो भित्त्वैव गगनं
प्रविष्टो रश्मिमण्डलम् । एकीभूतञ्च तत्तेजः क्षणेनादित्यतां गतम्
॥ १६ ॥ तत्र नः संशयो जातः तयोस्तेजःसमागमे । अनयोः को
भवेत् सूर्य्यो रथस्थो योऽयमागतः ॥ १७ ॥ ते वयं जातसन्देहाः
पर्य्यपृच्छामहे रविम् । क एष दिवमाक्रम्य गतः सूर्य्य इवापरः ॥१८॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि उञ्छवृत्त्युपाख्याने
द्विषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६२ ॥

---

सूर्य्य उवाच । नैष देवोऽनिलसखो नासुरो न च पन्नगः ।
उञ्छवृत्तिव्रते सिद्धो मुनिरेष दिवं गतः ॥ १ ॥ एष मूलफलाहारः
शीर्णपर्णाशनस्तथा । अब्भक्षो वायुभक्षश्च आसीद्विप्रः समाहितः
॥ २ ॥ भवश्चानेन विप्रेण संहिताभिरभिष्टुतः । स्वर्गद्वारे कृतो-
द्योगो येनासौ त्रिदिवं गतः ॥ ३ ॥ असङ्गतिरनाकाङ्क्षी नित्य-
मुञ्छशिलाशनः । सर्वभूतहिते युक्त एष विप्रो भुजङ्गमाः ॥ ४ ॥
न हि देवा न गन्धर्वा नासुरा न च पन्नगाः । प्रभवन्तीह भूतानां

माप्तानामुत्तमां गतिम्। एतदेवंविधं दृष्टमाश्चर्य्यं तत्र मे द्विज संसिद्धो मानुषः कामं योऽसौ सिद्धगतिं गतः। सूर्य्येण सहितो ब्रह्मन् पृथिवीं परिवर्त्तते ॥ ६ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि उञ्छवृत्त्युपाख्याने
त्रिषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६२ ॥

---

ब्राह्मण उवाच। आश्चर्य्यं नात्र सन्देहः सुप्रीतोऽस्मि भुजङ्गम। अन्वर्थोपगतैर्वाक्यैः पन्थानञ्चास्मि दर्शितः ॥ १ ॥ स्वस्ति तेऽस्तु गमिष्यामि साधो भुजगसत्तम। स्मरणीयोऽस्मि भवता सम्प्रेषणनियोजनैः ॥ २ ॥

नाग उवाच। अनुक्त्वा हृद्गतं कार्य्यं क्वेदानीं प्रस्थितो भवान्। उच्यतां द्विज यत् कार्य्यं यदर्थं त्वमिहागतः ॥ ३ ॥ उक्तानुक्ते कृते कार्य्ये मामामन्त्र्य द्विजर्षभ। मया प्रत्यभ्यनुज्ञातस्ततो यास्यसि सुव्रत ॥ ४ ॥ न हि मां केवलं दृष्ट्वा त्यक्त्वा प्रणयवानिह। गन्तुमर्हसि विप्रर्षे वृक्षमूलगतो यथा ॥ ५ ॥ त्वयि चाहं द्विजश्रेष्ठ भवान्मयि न संशयः। लोकोऽयं भवतः सर्व्वः का चिन्ता मयि तेऽनघ ॥ ६ ॥

ब्राह्मण उवाच। एवमेतन्महाप्राज्ञ विदितात्मन् भुजङ्गम। नातिरिक्तास्त्वया देवाः सर्व्वथैव यथातथम् ॥ ७ ॥ य एव त्वं स एवाहं योऽहं स तु भवानपि। अहं भवांश्च भूतानि सर्व्वे यत्र गताः सदा ॥ ८ ॥ आसीत्तु मे भोगिपते संशयः पुण्यसञ्चये। सोऽहमुञ्छव्रतं साधो चरिष्याम्यर्थसाधनम् ॥ ९ ॥ एष मे निश्चयः साधो कृतं कारणमुत्तमम्। आमन्त्रयामि भद्रन्ते कृतार्थोऽस्मि भुजङ्गम ॥ १० ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि उञ्छवृत्त्युपाख्याने
चतुःषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६४ ॥

---

भीष्म उवाच । स चामन्त्र्योरगश्रेष्ठं ब्राह्मणः कृतनिश्चयः । दीक्षाकाङ्क्षी तदा राजंश्च्यवनं भार्गवं श्रितः ॥ १ ॥ स तेन कृतसंस्कारो धर्म्ममेवाभितस्थिवान् । तथैव च कथामेतां राजन् कथितवांस्तदा ॥ २ ॥ भार्गवेणापि राजेन्द्र जनकस्य निवेशने । कथैषा कथिता पुण्या नारदाय महात्मने ॥ ३ ॥ नारदेनापि राजेन्द्र देवेन्द्रस्य निवेशने । कथिता भारतश्रेष्ठ पृष्टेनाक्लिष्टकर्म्मणा ॥ ४ ॥ देवराजेन च पुरा कथितैषा कथा शुभा । समस्तेभ्य प्रशस्तेभ्यो विप्रेभ्यो वसुधाधिप ॥ ५ ॥ यदा च मम रामेण युद्धमासीत् सुदारुणम् । वसुभिश्च तदा राजन् कथेयं कथिता मम ॥ ६ ॥ पृच्छमानाय तत्त्वेन मया चैवोत्तमा तव । कथेयं कथिता पुण्या धर्म्या धर्म्मभृताम्बर ॥ ७ ॥ तदयं परमो धर्म्मो यन्मां पृच्छसि भारत । आसीद्वीरो ह्यनाकाङ्क्षी धर्म्मार्थकरणे नृप ॥ ८ ॥ स च किल कृतनिश्चयो द्विजो भुजगपतिप्रतिदेशितात्मकृत्य । यमनियमसहो वनान्तरं परिगणितोञ्छशिलाशनः प्रविष्टः ॥ ९ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि उञ्छवृत्त्युपाख्याने
पञ्चषष्ट्यधिकत्रिशततमोऽध्याय ॥ ३६५ ॥

समाप्तमिदं मोक्षधर्म्मपर्व्व ।

---

॥ समाप्तञ्च शान्तिपर्व्व ।